January

ওঁ মঙ্গলং ভগবান বিষ্ণু মঙ্গলং গরুড় ধ্বজঃ
মঙ্গলং পুণ্ডরীকাক্ষঃ মঙ্গলায়তনো হরিঃ।

গজাননং ভূত গণাদি সেবিতং কপিত্থ জম্বু ফলচারু ভক্ষণম্
উমাসুতং শোক বিনাশকারকং নমামি বিঘ্নেশ্বর পাদপঙ্কজম্॥

নমোঽস্ত্বনন্তায় সহস্রমূর্তয়ে সহস্রপাদাক্ষি শিরোরুবাহবে
সহস্রনাম্নে পুরুষায় শাশ্বতে সহস্রকোটি যুগধারিণে নমঃ॥

নমো ব্রহ্মণ্যদেবায় গো ব্রাহ্মণহিতায় চ
জগদ্ধিতায় কৃষ্ণায় গোবিন্দায় নমো নমঃ।



esday

1

1991

# January

## 2 Wednesday

"দুর্গাসপ্তশতী" ষষ্ঠ সংস্করণ 1971
[illegible]
চৌক, বারাণসী

## 3 Thursday

शापोद्धार मंत्रः
(सप्त वारं जपेत्)

ॐ ह्रीं क्लीं श्रीं क्रां क्रीं चण्डिके देवि
शापानुग्रहं कुरु कुरु स्वाहा

January ॐ सर्व मंगल माङ्गल्ये शिवे सर्वार्थ साधिके।
शरण्ये त्र्यम्बके गौरि नारायणि नमोऽस्तुते ॥

4 Friday

1 ॐ पृथ्वी त्वया धृता लोका देवि त्वं विष्णुना धृता।
त्वं च धारय मां देवि पवित्रं कुरु चासनम् ॥

2 ॐ अपसर्पन्तु ते भूता ये भूता भुवि संस्थिता।
ये भूता विघ्न कर्तारस्ते नश्यन्तु शिवाज्ञया ॥

(पाठ विधि से)

3 (ओ) दीप, देवि स्वरूपस्त्वं कर्म साक्षी ह्यविघ्नकृत्।
यावत् कर्म समाप्तिः स्यात्तावत् त्वं सुस्थिरो भव ॥

5 Saturday

4 दुर्गमे दुस्तरे कार्ये भवदुःख विनाशिनीम्।
पूजयामि सदा भक्त्या दुर्गां दुर्गति नाशिनीम् ॥

(कवच [illegible])

खड्गिनी शूलिनी घोरा गदिनी चक्रिणी तथा।
शंखिनी चापिनी बाण भुशुण्डी परिघायुधा ॥ 1
सौम्या सौम्यतराशेष सौम्येभ्य स्त्वति सुन्दरी।
परापराणां परमा त्वमेव परमेश्वरी ॥ 2
यच्च किंचित् क्वचित् वस्तु सदसद्वाखिलात्मिके।
तस्य सर्वस्य या शक्तिः सा त्वं किं स्तूयसे तदा ॥ 3

Sunday 6

यया त्वया जगत्स्रष्टा जगत्पात्यत्ति यो जगत्।
सोऽपि निद्रावशं नीतः कस्त्वां स्तोतुमिहेश्वरः ॥ 4

January 9 Wednesday

([illegible])

(1) सर्वस्वरूपे सर्वेशे सर्वशक्तिसमन्विते ।
भयेभ्यस्त्राहि नो देवि दुर्गे देवि नमोऽस्तु ते ॥

(2) ॐ महामाये महाकाले सर्वशक्तिस्वरूपिणी ।
चतुर्वर्गस्त्वयि न्यस्तस्तस्मात्मां सिद्धिदा भव ॥

(3) विद्युद्दामसमप्रभां मृगपतिस्कन्धस्थितां भीषणां
कन्याभिः करवालखेटविलसद्धस्ताभिरासेविताम्
हस्तैश्चक्रधरालिखेटविशिखांश्चापं गुणं तर्जनीम्
बिभ्राणामनलात्मिकां शशिधरां दुर्गां त्रिनेत्रां भजे ॥

प्रथम चरित्र के

(4) नीलोत्पलदलश्यामां सर्वशत्रुविदारिणीम् ।

10 Thursday

नरमुण्डं तथा खड्गं कमलं चामरं तथा ।
बिभ्राणां रक्तवदनां दंष्ट्रालीं घोररूपिणीम् ॥
अट्टाट्टहासनिरतां सर्वदा च दिगम्बराम् ।
शवासनस्थितां देवीं मुण्डमालाविभूषिताम् ॥
खड्गं चक्रगदेषुचापपरिघान् शूलं भुशुण्डीं शिरः ।
शंखं संदधतीं करैस्त्रिनयनां सर्वाङ्गभूषावृताम् ।
नीलाश्मद्युतिमास्यपाददशकां सेवे महाकालिकाम् ।
यामस्तौत्स्वपिते हरौ कमलजो हन्तुं मधुं कैटभम् ॥

1991

(1) दुर्गे स्मृता हरसि भीतिमशेषजन्तोः
स्वस्थैः स्मृता मतिमतीव शुभां ददासि ।
दारिद्र्यदुःखभयहारिणि का त्वदन्या
सर्वोपकारकरणाय सदार्द्रचित्ता ॥

(2) शूलेन पाहि नो देवि पाहि खड्गेन चाम्बिके
घण्टास्वनेन नः पाहि चापज्यानिःस्वनेन च ॥
प्राच्यां रक्ष प्रतीच्यां च चण्डिके रक्ष दक्षिणे
भ्रामणेनात्मशूलस्य उत्तरस्यां तथेश्वरि ॥
सौम्यानि यानि रूपाणि त्रैलोक्ये विचरन्ति ते
यानि चात्यन्तघोराणि तै रक्षास्मांस्तथा भुवम् ॥
खड्गशूलगदादीनि यानि चास्त्राणि तेऽम्बिके
करपल्लवसङ्गीनि तैरस्मान् रक्ष सर्वतः ॥

3 स्तुता सुरैः पूर्वमभीष्टसंश्रयात्
तथा सुरेन्द्रेण दिनेषु सेविता ।
करोति सा नः शुभहेतुरीश्वरी
शुभानि भद्राणि+अभिहन्तु चापदः ॥

‘एकादश अध्याय’ से

January 18 Friday

(1) देवि प्रपन्नार्तिहरे प्रसीद प्रसीद मातर्जगतोऽखिलस्य ।
प्रसीद विश्वेश्वरि पाहि विश्वम् त्वमीश्वरी देवि चराचरस्य ॥

(2) आधारभूता जगतस्त्वमेका महीस्वरूपेण यतः स्थितासि ।
अपां स्वरूपस्थितया त्वयैतदाप्यायते कृत्स्नमलङ्घ्यवीर्ये ॥

(3) त्वं वैष्णवी शक्तिरनन्तवीर्या विश्वस्य बीजं परमासि माया ।
सम्मोहितं देवि समस्तमेतत्त्वं वै प्रसन्ना भुवि मुक्तिहेतुः ॥

(4) विद्याः समस्तास्तव देवि भेदाः स्त्रियः समस्ताः सकला जगत्सु ।
त्वयैकया पूरितमम्बयैतत्का ते स्तुतिः स्तव्यपरा परोक्तिः ॥

Saturday 19

(5) सर्वभूता यदा देवी भुक्तिमुक्तिप्रदायिनी ।
त्वं स्तुता स्तुतये का वा भवन्तु परमोक्तयः ॥

(6) सर्वस्य बुद्धिरूपेण जनस्य हृदि संस्थिते ।
स्वर्गापवर्गदे देवि नारायणि नमोऽस्तु ते ॥

(7) कलाकाष्ठादिरूपेण परिणामप्रदायिनी ।
विश्वस्योपरतौ शक्ते नारायणि नमोऽस्तु ते ॥

Sunday 20

(8) सर्वमङ्गलमाङ्गल्ये शिवे सर्वार्थसाधिके ।
शरण्ये त्र्यम्बिके गौरि नारायणि नमोऽस्तु ते ॥

1991

(9) सृष्टिस्थिति विनाशानां शक्तिभूते सनातनि ।
गुणाश्रये गुणमये नारायणि नमोऽस्तु ते ॥

(10) शरणागत दीनार्त परित्राण परायणे
सर्वस्यार्ति हरे देवि नारायणि नमोऽस्तु ते॥

(11) हंसयुक्त विमानस्थे ब्रह्माणीरूप धारिणि ।
कौशाम्भः क्षरिके देवि नारायणि नमोऽस्तु ते ॥

(12) त्रिशूल चन्द्राहि धरे महा वृषभ वाहिनि
माहेश्वरीस्वरूपेण नारायणि नमोऽस्तु ते ॥

(13) मयूर कुक्कुट वृते महाशक्तिधरेऽनघे ।
कौमारीरूप संस्थाने नारायणि नमोऽस्तु ते ॥

(14) शंखचक्र गदा शार्ङ्ग गृहीत परमायुधे
प्रसीद वैष्णवीरूपे नारायणि नमोऽस्तु ते ॥

(15) गृहीतोग्र महाचक्रे दंष्ट्रोद्धृत वसुन्धरे
वाराह रूपिणि शिवे नारायणि नमोऽस्तु ते ॥

(16) नृसिंहरूपेणोग्रेण हन्तुं दैत्यान् कृतोद्यमे
त्रैलोक्य त्राण सहिते नारायणि नमोऽस्तु ते ॥

(17) किरीटिनि महावज्रे सहस्रनयनोऽज्वले ।
वृत्रप्राणहरे चैन्द्रि नारायणि नमोऽस्तु ते ॥

(18) शिवदूतीस्वरूपेण हतदैत्ये महाबले ।
घोररूपे महारावे नारायणि नमोऽस्तु ते ॥

(19) दंष्ट्राकरालवदने शिरोमालाविभूषणे ।
चामुण्डे मुण्डमथने नारायणि नमोऽस्तु ते ॥

(२०) लक्ष्मि लज्जे महाविद्ये श्रद्धे पुष्टि स्वधे ध्रुवे ।
महारात्रि महामाये नारायणि नमोऽस्तु ते ॥

(२१) मेधे सरस्वति वरे भूति बाभ्रवि तामसि ।
नियते त्वं प्रसीदेशे नारायणि नमोऽस्तु ते ॥



(२२) सर्वस्वरूपे सर्वेशे सर्वशक्तिसमन्विते ।
भयेभ्यस्त्राहि नो देवि दुर्गे देवि नमोऽस्तु ते ॥

(२३) एतत्ते वदनं सौम्यं लोचनत्रयभूषितम् ।
पातु नः सर्वभूतेभ्यः कात्यायनि नमोऽस्तु ते ॥

(२४) ज्वालाकरालमत्युग्रमशेषासुरसूदनम् ।
त्रिशूलं पातु नो भीतेर्भद्रकालि नमोऽस्तु ते ॥

February 1 Friday

(२५) हिनस्ति दैत्यतेजांसि स्वनेनापूर्य या जगत्।
सा घण्टा पातु नो देवि पापेभ्यो नः सुतानिव॥

(२६) असुरासृग्वसापङ्कचर्चितस्ते करोज्ज्वलः।
शुभाय खड्गो भवतु चण्डिके त्वां नता वयम्॥

(२७) रोगानशेषानपहंसि तुष्टा रुष्टा तु कामान् सकलानभीष्टान्।
त्वामाश्रितानां न विपन्नराणां त्वामाश्रिता ह्याश्रयतां प्रयान्ति॥

(२८) एतत् कृतं यत्कदनं त्वयाद्य धर्मद्विषां देवि महासुराणाम्।
रूपैरनेकैर्बहुधात्ममूर्तिं कृत्वाम्बिके तत् प्रकरोति कान्या॥

(२९) विद्यासु शास्त्रेषु विवेकदीपेष्वाद्येषु वाक्येषु च का त्वदन्या।
ममत्वगर्तेऽतिमहान्धकारे विभ्रामयत्येतदतीव विश्वम्॥

(30) रक्षांसि यत्रोग्रविषाश्च नागा यत्रारयो दस्युबलानि यत्र।
दावानलो यत्र तथाब्धिमध्ये तत्र स्थिता त्वं परिपासि विश्वम्॥

(31) विश्वेश्वरि त्वं परिपासि विश्वं विश्वात्मिका धारयसीह विश्वम्।
विश्वेशवन्द्या भवती भवन्ति विश्वाश्रया ये त्वयि भक्तिनम्राः॥

Saturday 2

(32) देवि प्रसीद परिपालय नोऽरिभीतेर्नित्यं यथासुरवधादधुनैव सद्यः।

Sunday 3 पापानि सर्वजगतां प्रशमं नयाशु उत्पातपाकजनितांश्च
महोपसर्गान्॥

1991

February (35) प्रणतानां प्रसीद त्वं देवी विश्वार्तिहारिणि ।
त्रैलोक्यवासिनामीड्ये लोकानां वरदा भव ॥

6 Wednesday



× × ×

सर्वाबाधाप्रशमनं त्रैलोक्यस्याखिलेश्वरि ।
एवमेव त्वया कार्यमस्मद्वैरिविनाशनम् ॥

7 Thursday

[illegible]

## अथ कवचम्

श्री गणेशाय नमः ॥ श्री सरस्वत्यै नमः ॥
श्री गुरुभ्यो नमः ॥ कुलदेवतायै नमः ॥ अविघ्नमस्तु ॥
ॐ नारायणाय नमः ॥ ॐ नराय नरोत्तमाय नमः ॥
ॐ सरस्वत्यै देव्यै नमः ॥ ॐ वेदव्यासाय नमः ॥ ॐ नमश्चण्डिकायै ॥

अस्य श्रीचण्डीकवचस्य ब्रह्मा ऋषिः अनुष्टुप् छन्दः, चामुण्डा देवता, अङ्गन्यासोक्तमातरो बीजं, दिग्बन्धदेवतास्तत्त्वं, श्रीजगदम्बाप्रीत्यर्थे सप्तशतीपाठाङ्गजपे विनियोगः ॥

॥ ॐ नमश्चण्डिकायै ॥ मार्कण्डेय उवाच ॥

ॐ यद्गुह्यं परमं लोके सर्वरक्षाकरं नृणाम् ।
यन्न कस्यचिदाख्यातं तन्मे ब्रूहि पितामह ॥ १॥

॥ ब्रह्मोवाच ॥
अस्ति गुह्यतमं विप्र सर्वभूतोपकारकम् ।
देव्यास्तु कवचं पुण्यं तच्छृणुष्व महामुने ॥ २॥
प्रथमं शैलपुत्रीति द्वितीयं ब्रह्मचारिणी ।
तृतीयं चन्द्रघण्टेति कूष्माण्डेति चतुर्थकम् ॥ ३॥

पञ्चमं स्कन्दमातेति षष्ठं कात्यायनीति च।
सप्तमं कालरात्रीति महागौरीति चाष्टमम् ॥४॥

नवमं सिद्धिदात्री च नवदुर्गाः प्रकीर्तिताः।
उक्तान्येतानि नामानि ब्रह्मणैव महात्मना ॥५॥

अग्निना दह्यमानस्तु शत्रुमध्ये गतो रणे।
विषमे दुर्गमे चैव भयार्ताः शरणं गताः ॥६॥

न तेषां जायते किंचिदशुभं रणसंकटे।
नापदं तस्य पश्यन्ति शोकदुःखभयं नहि ॥७॥

यैस्तु भक्त्या स्मृता नूनं तेषां सिद्धिः प्रजायते।
प्रेतसंस्था तु चामुण्डा वाराही महिषासना ॥८॥

ऐन्द्री गजसमारूढा वैष्णवी गरुडासना।
माहेश्वरी वृषारूढा कौमारी शिखिवाहना ॥९॥



ब्राह्मी हंससमारूढा सर्वाभरणभूषिता।
नानाभरणशोभाढ्या नानारत्नोपशोभिताः ॥१०॥

दृश्यन्ते रथमारूढा देव्यः क्रोधसमाकुलाः।
शङ्खं चक्रं गदां शक्तिं हलं च मुसलायुधम् ॥११॥

खेटकं तोमरं चैव परशुं पाशमेव च।
कुन्तायुधं त्रिशूलं च शार्ङ्गमायुधमुत्तमम् ॥१२॥

दैत्यानां देहनाशाय भक्तानामभयाय च।
धारयन्त्यायुधानीत्थं देवानां च हिताय वै ॥१३॥



महाबले महोत्साहे महाभयविनाशिनि।
त्राहि मां देवि दुष्प्रेक्ष्ये शत्रूणां भयवर्धिनि ॥१४॥

प्राच्यां रक्षतु मामैन्द्री आग्नेय्यामग्निदेवता।
दक्षिणेऽवतु वाराही नैर्ऋत्यां खड्गधारिणी॥ 15॥

प्रतीच्यां वारुणी रक्षेद्वायव्यां मृगवाहिनी।
उदीच्यां रक्ष कौबेरि ईशान्यां शूलधारिणी॥ 16॥

ऊर्ध्वं ब्रह्माणी मे रक्षेदधस्ताद् वैष्णवी तथा।
एवं दश दिशो रक्षेच्चामुण्डा शववाहना॥ 17॥

जया मे अग्रतः पातु विजया पातु पृष्ठतः।
अजिता वामपार्श्वे तु दक्षिणे चापराजिता॥ 18॥

शिखां मे द्योतिनी रक्षेदुमा मूर्ध्नि व्यवस्थिता।
मालाधरी ललाटे च भ्रुवौ रक्षेद् यशस्विनी॥ 19॥

त्रिनेत्रा च भ्रुवोर्मध्ये यमघण्टा च नासिके।
शंखिनी चक्षुषोर्मध्ये श्रोत्रयो द्वारवासिनी॥ 20॥

कपोलौ कालिका रक्षेत्कर्णमूले तु शांकरी।
नासिकायां सुगन्धा च उत्तरोष्ठे च चर्चिका॥ 21॥

अधरे चामृतकला जिह्वायां च सरस्वती।
दन्तान् रक्षतु कौमारी कण्ठमध्ये तु चण्डिका॥ 22॥

घण्टिकां चित्रघण्टा च महामाया च तालुके।
कामाक्षी चिबुकं रक्षेद् वाचं मे सर्वमङ्गला॥ 23॥

ग्रीवायां भद्रकाली च पृष्ठवंशे धनुर्धरी।
नीलग्रीवा बहिःकण्ठे नलिकां नलकूबरी॥ 24॥

खड्गधारिण्युभौ स्कन्धौ बाहू मे वज्रधारिणी ।
हस्तयोर्दण्डिनी रक्षेदम्बिका चांगुलीस्तथा ॥ २५ ॥

नखांच्छूलेश्वरी रक्षेत् कुक्षौ रक्षेत् नलेश्वरी ॥
स्तनौ रक्षेन्महालक्ष्मी मनः शोकविनाशिनी ॥ २६ ॥

हृदये ललिता देवी उदरे शूलधारिणी ।
नाभौ च कामिनी रक्षेद् गुह्यं गुह्येश्वरी तथा ॥ 27 ॥

कट्यां भगवती रक्षे जानुनी विन्ध्यवासिनी ।
भूतनाथा च मेढ्रं मे ऊरू महिषवाहिनी ॥ २८ ॥

जंघे महाबला प्रोक्ता सर्वकाम प्रदायिनी ।
गुल्फयो नारसिंही च पादौ चामित तेजसी ॥ २९ ॥

पादांगुली: श्रीर्मे रक्षे पादाधस्तलवासिनी ।
नखं दंष्ट्राकराली च केशांश्चैवोर्ध्वकेशिनी ॥ ३० ॥

रोमकूपेषु कौबेरी त्वचं वागीश्वरी तथा ।
रक्तमज्जावसामांसान्यस्थिमेदांसि पार्वती ॥ ३१ ॥

अंत्राणी कालरात्रिश्च पित्तं च मुकुटेश्वरी ।
पद्मावती पद्मकोशे कफे चूडामणिस्तथा ॥ ३२ ॥

ज्वालामुखी नखज्वाला अभेद्या सर्वसन्धिषु ।
शुक्रं ब्रह्माणी मे रक्षे छायां छत्रेश्वरी तथा ॥ ३३ ॥

अहंकारं मनो बुद्धिं रक्ष मे धर्मधारिणी ।
प्राणापानौ तथा व्यानं समानोदानमेव च ॥ 34 ॥

यशः कीर्तिं च लक्ष्मीं च सदा रक्षतु वैष्णवी ।
गोत्रमिन्द्राणी मे रक्षेत्पशून्मे रक्ष चण्डिके ॥ 35 ॥

पुत्रान् रक्षेन्महालक्ष्मी भार्यां रक्षतु भैरवी ।
मार्गं क्षेमकरी रक्षेद्विजया सर्वतः स्थिता ॥ 36 ॥

रक्षाहीनं तु यत्स्थानं वर्जितं कवचेन तु ।
तत्सर्वं रक्ष मे देवि जयन्ती पापनाशिनी ॥ 37 ॥

पदमेकं न गच्छेत्तु यदीच्छेच्छुभमात्मनः ।
कवचेनावृतो नित्यं यत्र यत्राधिगच्छति ॥ 38 ॥



तत्र तत्रार्थलाभश्च विजयः सार्वकामिकः ।
यं यं कामयते कामं तं तं प्राप्नोति निश्चितम् ॥ 39 ॥

परमैश्वर्यमतुलं प्राप्स्यते भूतले पुमान् ।
निर्भयो जायते मर्त्यः संग्रामेष्वपराजितः ॥ 40 ॥

त्रैलोक्ये तु भवेत्पूज्यः कवचेनावृतः पुमान् ।
इदं तु देव्याः कवचं देवानामपि दुर्लभम् ॥ 41 ॥



यः पठेत्प्रयतो नित्यं त्रिसन्ध्यं श्रद्धयान्वितः ।
दैवी कला भवेत्तस्य त्रैलोक्येष्वपराजितः ॥ 42 ॥

जीवेद्वर्षशतं साग्रमपमृत्युविवर्जितः ।
नश्यन्ति व्याधयः सर्वे लूताविस्फोटकादयः ॥ ५३ ॥

स्थावरं जंगमं चापि कृत्रिमं चापि यद्विषम् ।
अभिचाराणि सर्वाणि मंत्रयंत्राणि भूतले ॥ ५४ ॥

भूचराः खेचराश्चैव जलजाश्चोपदेशिकाः ।
सहजाः कुलजाः माला डाकिनी शाकिनी तथा ॥ ५५ ॥

अन्तरिक्षचरा घोरा डाकिन्यश्च महाबलाः ।
ग्रहभूतपिशाचाश्च यक्षगन्धर्वराक्षसाः ॥ ५६ ॥

ब्रह्मराक्षसवेतालाः कूष्माण्डा भैरवादयः ।
नश्यन्ति दर्शनात्तस्य कवचे हृदि संस्थिते ॥ ५७ ॥

मानोन्नतिर्भवेद्राज्ञस्तेजोवृद्धिकरं परम् ।
यशसा वर्धते सोऽपि कीर्तिमण्डितभूतले ॥ ५८ ॥

जपेत्सप्तशतीं चण्डीं कृत्वा तु कवचं पुरा ।
यावद्भूमण्डलं धत्ते सशैलवनकाननम् ॥ ५९ ॥

तावत्तिष्ठति मेदिन्यां सन्ततिः पुत्रपौत्रिकी
देहान्ते परमं स्थानं यत्सुरैरपि दुर्लभम् ॥ ६० ॥

प्राप्नोति पुरुषो नित्यं महामायाप्रसादतः ।
लभते परमं रूपं शिवेन सह मोदते ॥ ६१ ॥

(इति वाराहपुराणे हरिहरब्रह्मविरचितं देव्याः कवचम् ।)

ਮਹਿਸ਼ਾਸੁਰ ਨਿਰ੍ਨਾਸ਼ਿ ਭਕ੍ਤਾਨਾਂ ਸੁਖਦੇ ਨਮਃ ।
ਰੂਪੰ ਦੇਹਿ ਜਯੰ ਦੇਹਿ ਯਸ਼ੋ ਦੇਹਿ ਦ੍ਵਿਸ਼ੋ ਜਹਿ ॥(੩+੧)॥

ਸ਼ੁੰਭਸ੍ਯੈਵ ਨਿਸ਼ੁੰਭਸ੍ਯ ਧੂਮ੍ਰਾਕ੍ਸ਼ਸ੍ਯ ਚ ਮਰ੍ਦਿਨੀ
ਰੂਪੰ ਦੇਹਿ ਜਯੰ ਦੇਹਿ ਯਸ਼ੋ ਦੇਹਿ ਦ੍ਵਿਸ਼ੋ ਜਹਿ ॥ (੫+੧)॥

॥ अर्गला स्तोत्रम् ॥

अस्य श्री अर्गला स्तोत्र मंत्रस्य विष्णु ऋषिः
अनुष्टुप् छन्दः श्री महालक्ष्मी देवता (जगदम्बा प्रीतये
सप्तशती पाठांग जपे विनियोगः ॥)

।ॐ नमश्चण्डिकायै ।

जयन्ती मंगला काली भद्रकाली कपालिनी ।
दुर्गा क्षमा शिवा धात्री स्वाहा स्वधा नमोऽस्तु ते ॥ १॥

जय त्वं देवि चामुण्डे जय भूतार्ति हारिणि ।
जय सर्वगते देवि कालरात्रि नमोऽस्तु ते ॥ २॥

मधुकैटभ विद्रावि विधातृ वरदे नमः ।
रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥ ३ ॥

वन्दिताङ्घ्रियुगे देवि सर्वसौभाग्यदायिनि ।
रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥ ४ ॥

रक्तबीजवधे देवि चण्डमुण्ड विनाशिनि ।
रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥ ५॥

अचिन्त्यरूपचरिते सर्वशत्रु विनाशिनि ।
रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥ ६॥

नतेभ्यः सर्वदा भक्त्या चण्डिके दुरितापहे ।
रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥७॥

स्तुवद्भ्यो भक्तिपूर्वं त्वां चण्डिके व्याधिनाशिनि ।
रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥८॥

चण्डिके सततं ये त्वामर्चयन्तीह भक्तितः ।
रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥९॥

देहि सौभाग्यमारोग्यं देहि देवि परं सुखम् ।
रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥१०॥

विधेहि द्विषतां नाशं विधेहि बलमुच्चकैः ।
रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥११॥

विधेहि देवि कल्याणं विधेहि परमां श्रियम् ।
रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥१२॥

विद्यावन्तं यशस्वन्तं लक्ष्मीवन्तं जनं कुरु ।
रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥१३॥

प्रचण्डदैत्यदर्पघ्ने चण्डिके प्रणताय मे ।
रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥१४॥

देवी प्रचण्डदोर्दण्डदैत्यदर्पविनाशिनि ।
रूपम् देहि जयं देहि यशो देहि द्विषो जहि ॥ (२० + १) ॥

चतुर्भुजे चतुर्वक्त्र संस्तुते परमेश्वरि ।
रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥ १५ ॥

कृष्णेन संस्तुते देवि शश्वद्भक्त्या त्वमम्बिके ।
रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥ १६ ॥

हिमाचलसुतानाथसंस्तुते परमेश्वरि ।
रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥ १७ ॥

सुरासुरशिरोरत्ननिघृष्टचरणेऽम्बिके ।
रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥ १८ ॥

इन्द्राणीपतिसद्भावपूजिते परमेश्वरि ।
रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥ १९ ॥

देवि भक्तजनोद्दामदत्तानन्दोदयेऽम्बिके ।
रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥ २० ॥

पुत्रान् देहि धनं देहि सर्वकामांश्च देहि मे ।
रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥ २१ ॥

पत्नीं मनोरमां देहि मनोवृत्तानुसारिणीम् ।
तारिणीं दुर्गसंसारसागरस्य कुलोद्भवाम् ॥ २२ ॥

इदं स्तोत्रं पठित्वा तु महास्तोत्रं पठेन्नरः ।
स तु सप्तशतीसंख्यावरमाप्नोति सम्पदाम् ॥ २३ ॥

(इति मार्कण्डेयपुराणे अर्गलास्तोत्रम्)

॥ अथ कीलकम् ॥

अस्य श्री कीलकमंत्रस्य शिव ऋषिः अनुष्टुप् छन्दः श्री महासरस्वती देवता श्री जगदम्बा प्रीत्यर्थे (सप्तशती पाठाङ्ग जपे) विनियोगः ॥

॥ ॐ नमश्चण्डिकायै ॥ मार्कण्डेय उवाच ॥

विशुद्धज्ञानदेहाय त्रिवेदी दिव्यचक्षुषे ।
श्रेयः प्राप्तिनिमित्ताय नमः सोमार्धधारिणे ॥ १ ॥

सर्वमेतद्विजानीयात् मंत्राणामपि कीलकम् ।
सोऽपि क्षेममवाप्नोति सततं जाप्य तत्परः ॥ २ ॥

सिद्ध्यन्त्युच्चाटनादीनि वस्तूनि सकलान्यपि ।
एतेन स्तुवतां नित्यं स्तोत्रमात्रेण सिद्ध्यति ॥ ३ ॥

न मंत्रो नौषधं तत्र न किंचिदपि विद्यते ।
विना जाप्येन सिद्ध्येत सर्वमुच्चाटनादिकम् ॥ ४ ॥

समग्राण्यपि सिद्ध्यन्ति लोकशंकामिमां हरः ।
कृत्वा निमंत्रयामास सर्वमेवमिदं शुभम् ॥ ५ ॥

स्तोत्रं वै चण्डिकायास्तु तच्च गुप्तं चकार सः ।
समाप्तिर्न च पुण्यस्य तां यथावन्नियंत्रणाम् ॥ ६ ॥

सोऽपि क्षेममवाप्नोति सर्वमेव न संशयः।
कृष्णायां वा चतुर्दश्यामष्टम्यां वा समाहितः॥ ७॥

ददाति प्रतिगृह्णाति नान्यथैषा प्रसीदति।
इत्थं रूपेण कीलेन महादेवेन कीलितम्॥ ८॥

यो निष्कीलां विधायैनां नित्यं जपति संस्फुटम्।
स सिद्धः स गणः सोऽपि गन्धर्वो जायते नरः॥ ९॥

न चैवाप्यटतस्तस्य भयं क्वापि हि जायते।
नापमृत्युवशं याति मृतो मोक्षमवाप्नुयात्॥ १०॥

ज्ञात्वा प्रारभ्य कुर्वीत ह्यकुर्वाणो विनश्यति।
ततो ज्ञात्वैव सम्पन्नमिदं प्रारभ्यते बुधैः॥ ११॥



सौभाग्यादि च यत्किंचिद् दृश्यते ललनाजने।
तत्सर्वं तत्प्रसादेन तेन जाप्यमिदं शुभम्॥ १२॥

शनैस्तु जप्यमानेऽस्मिन् स्तोत्रे सम्पत्तिरुच्चकैः।
भवत्येव समग्रापि ततः प्रारभ्यमेव तत्॥ १३॥

ऐश्वर्यं यत्प्रसादेन सौभाग्यारोग्यसम्पदः।
शत्रुहानिः परो मोक्षः स्तूयते सा न किं जनैः॥ १४॥

(इति भगवत्या कीलकस्तोत्रम् सम्पूर्णम्॥)

॥ अङ्गध्यानम् ॥

खड्गं चक्रगदेषुचापपरिघाञ्छूलं भुशुण्डीं शिरः
शङ्खं संदधतीं करैस्त्रिनयनां सर्वाङ्गभूषावृताम्।
नीलाश्मद्युतिमास्यपाददशकां सेवे महाकालिकां
यामस्तौत् स्वपिते हरौ कमलजो हन्तुं मधुं कैटभम् ॥१॥

अक्षस्रक् परशुं गदेषुकुलिशं पद्मं धनुः कुण्डिकां
दण्डं शक्तिमसिं च चर्म जलजं घंटं सुराभाजनम्।
शूलं पाशसुदर्शने च दधतीं हस्तैः प्रवालप्रभाम्
सेवे सैरिभमर्दिनीमिह महालक्ष्मीं सरोजस्थिताम् ॥२॥

घंटाशूलहलानि शंखमुसले चक्रं धनुः सायकं
हस्ताब्जैर्दधतीं घनान्तविलसच्छीतांशुतुल्यप्रभाम्।
गौरीदेहसमुद्भवां त्रिजगतामाधारभूतां महा-
-पूर्वामत्र सरस्वतीमनुभजे शुम्भादिदैत्यार्दिनीम् ॥३॥

=

॥ अथ रात्रिसूक्तम् ॥ (पौराणम्॥)

विश्वेश्वरीं जगद्धात्रीं स्थितिसंहारकारिणीम् ।
निद्रां भगवतीं विष्णोरतुलां तेजसः प्रभुः ॥ १ ॥

ब्रह्मोवाच ॥
त्वं स्वाहा त्वं स्वधा त्वं हि वषट्कारः स्वरात्मिका ।
सुधा त्वमक्षरे नित्ये त्रिधा मात्रात्मिका स्थिता ॥ २ ॥

अर्धमात्रास्थिता नित्या यानुच्चार्या विशेषतः ।
त्वमेव सन्ध्या सावित्री त्वं देवि जननी परा ॥ ३ ॥

त्वयैतद्धार्यते विश्वं त्वयैतत् सृज्यते जगत् ।
त्वयैतत् पाल्यते देवि त्वमत्स्यन्ते च सर्वदा ॥ ४ ॥



विसृष्टौ सृष्टिरूपा त्वं स्थितिरूपा च पालने ।
तथा संहृतिरूपान्ते जगतोऽस्य जगन्मये ॥ ५ ॥

महाविद्या महामाया महामेधा महास्मृतिः ।
महामोहा च भवती महादेवी महेश्वरी ॥ ६ ॥

प्रकृतिस्त्वं च सर्वस्य गुणत्रयविभाविनी ।
कालरात्रिर्महारात्रिर्मोहरात्रिश्च दारुणा ॥ ७ ॥

त्वं श्रीस्त्वमीश्वरी त्वं ह्रीस्त्वं बुद्धिर्बोधलक्षणा ।
लज्जा पुष्टिस्तथा तुष्टिस्त्वं शान्तिः क्षान्तिरेव च ॥ ८ ॥

खड्गिनी शूलिनी घोरा गदिनी चक्रिणी तथा।
शंखिनी चापिनी बाणभुशुण्डीपरिघायुधा॥ ९॥

सौम्या सौम्यतराशेषसौम्येभ्यस्त्वतिसुन्दरी।
परापराणां परमा त्वमेव परमेश्वरी ॥ १०॥

यच्च किंचित्क्वचिद्वस्तु सदसद्वाऽखिलात्मिके।
तस्य सर्वस्य या शक्तिः सा त्वं किं स्तूयसे तदा॥ ११॥

यया त्वया जगत्स्रष्टा जगत्पात्यत्ति यो जगत्।
सोऽपि निद्रावशं नीतः कस्त्वां स्तोतुमिहेश्वरः॥ १२॥

विष्णुः शरीरग्रहणमहमीशान एव च।
कारितास्ते यतोऽतस्त्वां कः स्तोतुं शक्तिमान् भवेत्॥ १३॥

सा त्वमित्थं प्रभावैः स्वैरुदारैर्देवि संस्तुता।
मोहयैतौ दुराधर्षावसुरौ मधुकैटभौ॥ १४॥

प्रबोधं च जगत्स्वामी नीयतामच्युतो लघु।
बोधश्च क्रियतामस्य हन्तुमेतौ महासुरौ॥ १५॥

॥ इति रात्रिसूक्तम् समाप्तम् ॥

—

॥ अथ तान्त्रिकं देवीसूक्तम् ॥

नमो देव्यै महादेव्यै शिवायै सततं नमः।
नमः प्रकृत्यै भद्रायै नियताः प्रणताः स्म ताम् ॥ १ ॥

रौद्रायै नमो नित्यायै गौर्यै धात्र्यै नमो नमः।
ज्योत्स्नायै चेन्दुरूपिण्यै सुखायै सततं नमः ॥ २ ॥

कल्याण्यै प्रणतां वृद्ध्यै सिद्ध्यै कुर्मो नमो नमः।
नैर्ऋत्यै भूभृतां लक्ष्म्यै शर्वाण्यै ते नमो नमः ॥ ३ ॥

दुर्गायै दुर्गपारायै सारायै सर्वकारिण्यै।
ख्यात्यै तथैव कृष्णायै धूम्रायै सततं नमः ॥ ४ ॥

अतिसौम्यातिरौद्रायै नतास्तस्यै नमो नमः।
नमो जगत्प्रतिष्ठायै देव्यै कृत्यै नमो नमः ॥ ५ ॥

या देवी सर्वभूतेषु विष्णुमायेति शब्दिता।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥ ६ ॥

या देवी सर्वभूतेषु चेतनेत्यभिधीयते।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥ ७ ॥

या देवी सर्वभूतेषु बुद्धिरूपेण संस्थिता।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥ ८ ॥

या देवी सर्वभूतेषु निद्रारूपेण संस्थिता ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥९॥

या देवी सर्वभूतेषु क्षुधारूपेण संस्थिता ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥१०॥

या देवी सर्वभूतेषु छायारूपेण संस्थिता ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥११॥

या देवी सर्वभूतेषु शक्तिरूपेण संस्थिता ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥१२॥



या देवी सर्वभूतेषु तृष्णारूपेण संस्थिता ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥१३॥

या देवी सर्वभूतेषु क्षान्तिरूपेण संस्थिता ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥१४॥

या देवी सर्वभूतेषु जातिरूपेण संस्थिता ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥१५॥

या देवी सर्वभूतेषु लज्जारूपेण संस्थिता ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥१६॥

या देवी सर्वभूतेषु शान्तिरूपेण संस्थिता ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥ १७ ॥

या देवी सर्वभूतेषु श्रद्धारूपेण संस्थिता ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥ १८ ॥

या देवी सर्वभूतेषु कान्तिरूपेण संस्थिता ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥ १९ ॥

या देवी सर्वभूतेषु लक्ष्मीरूपेण संस्थिता ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥ २० ॥

या देवी सर्वभूतेषु वृत्तिरूपेण संस्थिता ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥ २१ ॥



या देवी सर्वभूतेषु स्मृतिरूपेण संस्थिता ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥ २२ ॥

या देवी सर्वभूतेषु दयारूपेण संस्थिता ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥ २३ ॥

या देवी सर्वभूतेषु तुष्टिरूपेण संस्थिता ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥ २४ ॥



या देवी सर्वभूतेषु मातृरूपेण संस्थिता ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥ २५

या देवी सर्वभूतेषु भ्रान्तिरूपेण संस्थिता ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥ २६॥

इन्द्रियाणामधिष्ठात्री भूतानां चाखिलेषु या ।
भूतेषु सततं तस्यै व्याप्त्यै देव्यै नमो नमः ॥ २७॥

चितिरूपेण या कृत्स्नमेतद्व्याप्य स्थिता जगत् ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥ २८॥

स्तुता सुरैः पूर्वमभीष्टसंश्रयात्तथा सुरेन्द्रेण दिनेषु सेविता
करोतु सा नः शुभहेतुरीश्वरी शुभानि भद्राण्यभिहन्तु चापदः ॥ २९॥

या साम्प्रतं चोद्धतदैत्यतापितैरस्माभिरीशा च
सुरैर्नमस्यते ।
या च स्मृता तत्क्षणमेव हन्ति नः सर्वापदो
भक्ति-विनम्र मूर्तिभिः ॥ ३०॥

(इति देवी सूक्तम् ॥)

॥ अथ कुञ्जिका स्तोत्रम् ॥

शिव उवाच :

शृणु देवि प्रवक्ष्यामि कुञ्जिकास्तोत्रमुत्तमम् ।
येन मंत्रप्रभावेण चण्डीजापः शुभो भवेत् ॥ १ ॥

न कवचं नार्गला स्तोत्रं कीलकं न रहस्यकम् ।
न सूक्तं नापि ध्यानं च न न्यासो न च वार्चनम् ॥ २ ॥

कुञ्जिकापाठमात्रेण दुर्गापाठफलं लभेत् ।
अति गुह्यतरं देवि देवानामपि दुर्लभम् ॥ ३ ॥

गोपनीयं प्रयत्नेन स्वयोनिरिव पार्वति ।
मारणं मोहनं वश्यं स्तम्भनोच्चाटनादिकम् ॥ ४ ॥

पाठमात्रेण संसिद्ध्येत् कुञ्जिकास्तोत्रमुत्तमम् ।



अथ मंत्रः — ॐ श्लूं श्लूं श्लूं शं फट् ऐं ह्रीं
क्लीं ज्वलोज्ज्वल प्रज्वल ह्रीं ह्रीं क्लीं स्रावय स्रावय शापं नाशय नाशय
श्रीं श्रीं श्रीं जूं सः आदाय स्वाहा ।
ॐ श्लीं हुं क्लीं ग्लां जूं सः ज्वलोज्ज्वल
मंत्रं प्रबल हं सं लं क्षं स्वाहा ।

नमस्ते रुद्ररूपायै नमस्ते मधुमर्दिनि ।
नमः कैटभहारिण्यै नमस्ते महिषार्दिनि ॥
नमस्ते शुम्भहन्त्र्यै च निशुम्भासुरघातिनि ।
जाग्रतं हि महादेवि जपं सिद्धिं कुरुष्व मे ॥

ऐंकारी सृष्टिरूपायै ह्रींकारी प्रतिपालिका
क्लींकारी कामरूपिण्यै बीजरूपे नमोऽस्तु ते ॥
चामुण्डा चण्डघाती च यैंकारी वरदायिनि ।
विच्चे त्वभयदा नित्यं नमस्ते मंत्ररूपिणि ॥
धां धीं धूं धूर्जटेः पत्नी वां वीं वूं वागधीश्वरी ।
क्रां क्रीं क्रूं कुब्जिका देवी श्रां श्रीं श्रूं मे शुभं कुरु ॥
हुं हुं हुंकाररूपायै जं जं जं जम्भनादिनी ।
भ्रां भ्रीं भ्रूं भैरवी भद्रे भवान्यै ते नमो नमः ॥

ॐ अं कं चं टं तं पं सां विदुरां विदुरां विमर्दय ह्रीं क्षां क्षीं स्त्रीं जीवय त्रोटय त्रोटय जंभय जंभय दीपय दीपय हूं फट् जां वौषट् ऐं ह्रीं क्लीं रंजय रंजय संजय संजय गुंजय गुंजय बंधय बंधय भ्रां भ्रीं भ्रूं भैरवी भद्रे संकुच संकुच संचल संचल त्रोटय त्रोटय म्लीं म्लीं म्लूं स्वाहा ।

पां पीं पूं पार्वती पूर्णा खां खीं खूं खेचरी तथा ।
म्लां म्लीं म्लूं मूलविस्तीर्णा कुब्जिकायै नमो नमः ॥
सां सीं सूं सप्तशती देव्या मंत्रसिद्धिं कुरुष्व मे ।
इदं तु कुब्जिकास्तोत्रं मंत्रजागर्तिहेतवे ।
अभक्ते नैव दातव्यं गोपितं रक्ष पार्वति ।
विहीना कुब्जिका देव्या यस्तु सप्तशतीं पठेत् ।
न तस्य जायते सिद्धिररण्ये रुदितं यथा ॥

(इति रुद्रयामले गौरीतंत्रे (शिवपार्वती संवादे) कुब्जिका स्तोत्रं सम्पूर्णम् ।)

४ प्रार्थना ॥

आवाहनं न जानामि न जानामि विसर्जनम् ।
पूजां चैव न जानामि क्षम्यतां परमेश्वरि ॥ १ ॥

मंत्रहीनं क्रियाहीनं भक्तिहीनं सुरेश्वरि ।
यत्पूजितं मया देवि परिपूर्णं तदस्तु मे ॥ २ ॥

अपराध सहस्राणि क्रियन्तेऽहर्निशं मया ।
दासोऽयमिति मां मत्वा प्रसीद परमेश्वरि ॥ ३ ॥

कामेश्वरि जगन्मातः सच्चिदानन्द विग्रहे ।
गृहाणार्चामिमां प्रीत्या प्रसीद परमेश्वरि ॥ ४ ॥

सापराधोऽस्मि शरणं प्राप्तस्त्वां जगदम्बिके ।
इदानीमनुकम्प्योऽहं यथेच्छसि तथा कुरु ॥ ५ ॥

अपराध शतं कृत्वा जगदम्बेति चोच्चरेत् ।
यां गतिं समवाप्नोति न तां ब्रह्मादयः सुराः ॥ ६ ॥

यदत्र पाठे जगदम्बिके मया
विसर्ग बिन्द्वक्षर हीनमीरितम् ।
तदस्तु सम्पूर्णतमं प्रसादतः
संकल्पसिद्धिश्च सदैव जायताम् ॥ ७ ॥

यदक्षरपद भ्रष्टं मात्राहीनं च यद्भवेत् ।
तत्सर्वं क्षम्यतां देवि प्रसीद परमेश्वरि ॥ ८ ॥

आपन्नाद्विस्मृते भ्रान्त्या यन्न्यूनमधिकं कृतम् ।
विपरीतं तु तत्सर्वं क्षमस्व परमेश्वरि ॥ ९ ॥

यस्य स्मृत्या च नामोक्त्या तपोयज्ञक्रियादिषु ।
न्यूनं सम्पूर्णतां यातु त्वत् प्रसादान्महेश्वरी ॥ १० ॥

मंत्रहीनं क्रियाहीनं भक्तिहीनं च यद्भवेत् ।
यत्स्तुतासि मया देवि तस्मात्वं वरदा भव ॥ ११ ॥

कामेश्वरी जगन्मातः सच्चिदानन्द विग्रहे ।
गृहाण त्वं स्तुतिमिमां प्रसीद करुणानिधे ॥ १२ ॥

आवाहनं च पूजां च त्वन्माहात्म्यं यथार्थतः ।
विसर्जनं न जानामि चण्डिके त्वं क्षमस्व मे ॥ १३ ॥

मार्कण्डेय पुराणोक्तं देवी माहात्म्यमुत्तमम् ।
यः पठेच्छृणुयाद्भक्त्या तस्य मुक्तिर्न संशयः ॥ १४ ॥

या माया मधुकैटभ प्रमथिनी
या माहिषोन्मूलिनी ।
या धूम्रेक्षण चण्डमुण्ड मथिनी
या रक्तबीजाशिनी ।
शक्तिः शुंभ निशुंभ दैत्यदलनी
या सिद्धिलक्ष्मीः परा ।
सा चण्डी नवकोटि शक्ति सहिता
माँ पातु विश्वेश्वरी ॥ १५ ॥

May

24 Friday

गुह्यातिगुह्यगोप्त्री त्वं गृहाणास्मत्कृतं जपम्।
सिद्धिर्भवतु मे देवि त्वत्प्रसादान्महेश्वरि ॥१८॥

अनेन च सप्तशती पाठाख्येन कर्मणा श्रीमहाकाली
महालक्ष्मी महासरस्वती देवी च प्रीयतां न मम ॥
सर्वं समर्पये

25 Saturday

Sunday 26

1991

## ॥ अथ देव्यपराध क्षमापन स्तोत्रम् ॥

न मंत्रं नो यन्त्रं तदपि च न जाने स्तुतिमहो
न चाह्वानं ध्यानं तदपि च न जाने स्तुतिकथा: ।
न जाने मुद्रास्ते तदपि च न जाने विलपनं
परं जाने मातस्त्वदनुसरणं क्लेशहरणम् ॥१॥

विधेरज्ञानेन द्रविणविरहेणालसतया
विधेयाशक्यत्वात्तव चरणयोर्या च्युतिरभूत् ।
तदेतत् क्षन्तव्यं जननि सकलोद्धारिणि शिवे
कुपुत्रो जायेत क्वचिदपि कुमाता न भवति ॥२॥

पृथिव्यां पुत्रास्ते जननि बहव: सन्ति सरला:
परं तेषां मध्ये विरलतरलोऽहं तव सुत: ।
मदीयोऽयं त्याग: समुचितमिदं नो तव शिवे
कुपुत्रो जायेत क्वचिदपि कुमाता न भवति ॥३॥

जगन्मातर्मातस्तव चरणसेवा न रचिता
न वा दत्तं देवि द्रविणमपि भूयस्तव मया ।
तथापि त्वं स्नेहं मयि निरुपमं यत्प्रकुरुषे
कुपुत्रो जायेत क्वचिदपि कुमाता न भवति ॥४॥

Thursday

परित्यक्ता देवा विविधविधसेवाकुलतया
मया पंचाशीतेरधिकमपनीते तु वयसि
इदानीं चेन्मातस्तव यदि कृपा नापि भविता
निरालम्बो लम्बोदरजननि कं यामि शरणम् ॥५॥

श्वपाको जल्पाको भवति मधुपाकोपमगिरा
निरातङ्को रङ्को विहरति चिरं कोटिकनकैः ।
तवापर्णे कर्णे विशति मनुवर्णे फलमिदं
जनः को जानीते जननि जपनीयं जपविधौ ॥ ६ ॥

चिताभस्मालेपो गरलमशनं दिक्पटधरो
जटाधारी कण्ठे भुजगपतिहारी पशुपतिः ।
कपाली भूतेशो भजति जगदीशैकपदवीं
भवानि त्वत्पाणिग्रहणपरिपाटीफलमिदम् ॥ ७ ॥

न मोक्षस्याकांक्षा न च विभववांछापि च न मे
न विज्ञानापेक्षा शशिमुखि सुखेच्छापि न पुनः ।
अतस्त्वां संयाचे जननि जननं यातु मम वै
मृडानी रुद्राणी शिवशिव भवानीति जपतः ॥ ८ ॥



नाराधितासि विधिना विविधोपचारैः
किं रुक्षचिन्तनपरैर्न कृतं वचोभिः ।
श्यामे त्वमेव यदि किञ्चन मय्यनाथे
धत्से कृपामुचितमम्ब परं तवैव ॥ ९

आपत्सु मग्नः स्मरणं त्वदीयं करोमि दुर्गे करुणार्णवेशि ।
नैतच्छठत्वं मम भावयेथाः क्षुधा तृषार्ता जननीं स्मरन्ति ॥ १० ॥

June 7 Friday

जगदम्ब विचित्रमत्र किं
परिपूर्णा करुणास्ति चेन्मयि ।

अपराध परम्परावृतं
न हि माता समुपेक्षते सुतम् ॥ ११॥

मत्समः पातकी नास्ति पापघ्नी त्वत्समा न हि ।
एवं ज्ञात्वा महादेवि यथायोग्यं तथा कुरु ॥ १२॥

( इति देव्यपराध समापन स्तोत्रं सम्पूर्णम् ॥ )

Saturday 8

Sunday 9

1991

॥ अथ सरस्वतीकवचम् ॥

ब्रह्मोवाच :-

शृणु वत्स प्रवक्ष्यामि कवचं सर्वकामदम् ।
श्रुतिसारं श्रुतिसुखं श्रुत्युक्तं श्रुतिपूजितम् ॥ १॥

उक्तं कृष्णेन गोलोके मह्यं वृन्दावने वने ।
रासेश्वरेण विभुना रासेन रासमण्डले ॥ २॥

अतीव गोपनीयं च कल्पवृक्षसमं परम् ।
अश्रुताद्भुतमन्त्राणां समूहैश्च समन्वितम् ॥ ३॥

यद्धृत्वा पठनाद् ब्रह्मन् बुद्धिमांश्च बृहस्पतिः ।
यद्धृत्वा भगवाञ्छुक्रः सर्वदैत्येषु पूजितः ॥ ४॥



पठनाद्धारणाद्वाग्मी कवीन्द्रो वाल्मिकी मुनिः ।
स्वायंभुवो मनुश्चैव यद्धृत्वा सर्वपूजितः ॥ ५॥

कणादो गौतमः कण्वः पाणिनिः शाकटायनः ।
ग्रन्थं चकार यद्धृत्वा दक्षः कात्यायनः स्वयम् ॥ ६॥

धृत्वा वेदविभागं च पुराणान्यखिलानि च ।
चकार लीलामात्रेण कृष्णद्वैपायनः स्वयम् ॥ ७॥

शातातपश्च संवर्तो वसिष्ठश्च पराशरः ।
यद्धृत्वा पठनाद् ग्रन्थं याज्ञवल्क्यश्चकार सः ॥ ८॥

ऋष्यशृङ्गो भरद्वाजश्चास्तीको देवलस्तथा ।
जैगीषव्योऽथ जाबालिर्यद् धृत्वा सर्वपूजितः ॥९॥

कवचस्यास्य विप्रेन्द्र ऋषिरेष प्रजापतिः ।
स्वयं बृहस्पतिश्छन्दो देवीरासेश्वरः प्रभुः ॥१०॥

सर्वतत्त्वपरिज्ञाने सर्वार्थसाधनेषु च ।
कवितासु च सर्वासु विनियोगः प्रकीर्तितः ॥११॥

ॐ ह्रीं सरस्वत्यै स्वाहा शिरो मे पातु सर्वतः ॥ ॐ श्रीं वाग्देवतायै स्वाहा भालं मे सर्वदाऽवतु ॥१२॥ ॐ सरस्वत्यै स्वाहेति श्रोत्रं पातु निरन्तरम् । ॐ श्रीं ह्रीं भारत्यै स्वाहा नेत्रयुग्मं सदाऽवतु ॥१३॥ ॐ वाग्वादिन्यै स्वाहा नासां मे सर्वतोऽवतु ॥ ॐ ह्रीं विद्याधिष्ठातृदेव्यै स्वाहा ओष्ठं सदाऽवतु ॥१४॥ ॐ श्रीं ह्रीं ब्राह्म्यै स्वाहेति दन्तपंक्तीः सदाऽवतु । ॐ ऐमित्येकाक्षरो मन्त्रो मम कण्ठं सदाऽवतु ॥१५॥ ॐ श्रीं ह्रीं पातु मे ग्रीवां स्कन्धौ मे श्रीं सदाऽवतु ॥ ॐ श्रीं विद्याधिष्ठातृदेव्यै स्वाहा वक्षः सदाऽवतु ॥१६॥ ॐ ह्रीं विद्यास्वरूपायै स्वाहा मे पातु नाभिकाम् ॥ ॐ ह्रीं क्लीं वाण्यै स्वाहेति मम पृष्ठं सदाऽवतु ॥१७॥ सर्ववर्णात्मिकायै पादयुग्मं सदाऽवतु ॥ ॐ रागाधिष्ठातृदेव्यै सर्वाङ्गं मे सदाऽवतु ॥१८॥

ॐ सर्वकण्ठवासिन्यै स्वाहा प्राच्यां सदाऽवतु ।
ॐ ह्रीं जिह्वाग्रवासिन्यै स्वाहाऽग्निदिशि रक्षतु ॥१९॥

ॐ ऐं ह्रीं श्रीं सरस्वत्यै बुधजनन्यै स्वाहा ।
सततं मन्त्रराजोऽयं दक्षिणे मां सदाऽवतु ॥ २० ॥

ॐ ह्रीं श्रीं त्र्यक्षरो मन्त्रो नैऋत्ये मां सदाऽवतु ।
कविजिह्वाग्रवासिन्यै स्वाहा मां वारुणेऽवतु ॥ २१ ॥

ॐ सदाम्बिकायै स्वाहा वायव्ये मां सदाऽवतु ।
ॐ ह्रीं गद्यपद्यवासिन्यै स्वाहा मामुत्तरेऽवतु ॥ २२ ॥

ॐ ह्रीं सर्वशास्त्रवासिन्यै स्वाहैशान्यां सदाऽवतु ॥
ॐ सर्वपूजितायै स्वाहा चोर्ध्वं सदाऽवतु ॥ २३ ॥

ॐ ऐं ह्रीं पुस्तकवासिन्यै स्वाहाऽधो मां सदाऽवतु ॥
ॐ ग्रन्थबीजस्वरूपायै स्वाहा मां सर्वतोऽवतु ॥ २४ ॥

इति ते कथितं विप्र सर्वमन्त्रौघविग्रहम् ।
इदं विश्वजयं नाम कवचं ब्रह्मरूपिणम् ॥ २५

पुरा श्रुतं धर्मवक्त्रात् पर्वते गन्धमादने
तव स्नेहान्मयाऽऽख्यातं प्रवक्तव्यं न कस्यचित् ॥ २६

गुरुमभ्यर्च्य विधिवद्वस्त्रालंकारचन्दनैः ।
प्रणम्य दण्डवद् भूमौ कवचं धारयेत् सुधीः ॥ २७ ॥

पञ्चलक्षजपेनैव सिद्धं तु कवचं भवेत् ॥ २८ ॥
शक्नोति सर्वं जेतुं स कवचस्य प्रसादतः ॥ २९ ॥

इति ते कवचं श्रोतोक्तं कथितं कवचं शुभे ॥
स्तोत्र पूजा विधानं च ध्यानं च वन्दनं तथा ॥ ३० ॥

(इति सरस्वती कवचं समाप्तम् ॥)

=

अथ शाप मोचनम् ॥



चण्डिका शाप मोचन मंत्रस्य वशिष्ठ नारद संवाद प्रजापति ब्रह्म ऋषयः ॥
सर्वैश्वर्यकारिणी श्री दुर्गा देवता ॥ चरित्रत्रय बीजं। ह्रीं शक्ति रूपिणी कल्पित कार्य सिद्धर्थे विनियोगः ॥

ॐ रीं रेतःस्वरूपिण्यै मधुकैटभ मर्दिन्यै ब्रह्म शाप विमुक्ता भव।
ॐ श्रीं बुद्धि रूपिण्यै सैन्य नाशिन्यै ब्रह्मशाप विमुक्ता भव ॥
ॐ रक्तरूपिण्यै महिषासुर मर्दिन्यै ब्रह्म शाप विमुक्ता भव ॥
ॐ क्षुं क्षुधारूपिण्यै देव वन्दिन्यै ब्रह्म शाप विमुक्ता भव ॥
ॐ छां छाया रूपिण्यै दूत संवादिन्यै ब्रह्म शाप विमुक्ता भव ॥
ॐ शं शक्ति रूपिण्यै धूम्रलोचन घातिन्यै ब्रह्म शाप विमुक्ता भव ॥
ॐ तृं तृषा रूपिण्यै चण्डमुण्ड वध कारिण्यै ब्रह्म शाप विमुक्ता भव

ॐ क्षां क्षान्तिस्वरूपिण्यै रक्तबीजवधकारिण्यै ब्रह्मशापाद्विमुक्ता भव ॥
ॐ जां जातिस्वरूपिण्यै निशुम्भवधकारिण्यै ब्रह्मशापाद विमुक्ता भव ॥
ॐ लं लज्जास्वरूपिण्यै शुम्भवधकारिण्यै ब्रह्मशापाद विमुक्ता भव ॥
ॐ शां शान्तिस्वरूपिण्यै देवस्तुत्यै ब्रह्मशापाद विमुक्ता भव ॥
ॐ श्रं श्रद्धास्वरूपिण्यै फलदायै ब्रह्मशापाद विमुक्ता भव ॥
ॐ कां कान्तिस्वरूपिण्यै राजवरप्रदायै ब्रह्मशापाद विमुक्ता भव ॥
ॐ मां मातृस्वरूपिण्यै अर्गलादं हितायै ब्रह्मशापाद विमुक्ता भव ॥
ॐ ह्रीं श्रीं दुं दुर्गायै सर्वैश्वर्यकारिण्यै ब्रह्मशापाद विमुक्ता भव ॥
ॐ क्लीं ह्रीं नमः शिवायै आनन्दकवच स्वरूपिण्यै ब्रह्मशापाद विमुक्ता भव ॥ ॐ काल्यै काली ह्रीं फट् स्वाहायै ऋग्वेदस्वरूपिण्यै ब्रह्मशापाद विमुक्ता भव ॥

॥ इति ॥

श्रीरस्तु ॥ शुभमस्तु ॥

